# श्रीहनूमच्चतुर्विंशतिः

योबाल्येऽपि दिनेशं प्रोद्यन्तं पक्वदिव्यफलबुद्ध्या ।
व्युदपतदाशु हि पुष्करमादातुं नौमि तं समीरसुतम् ॥ १॥

यस्मै भगवान्ब्रह्मा प्रायच्छद्वायुतृप्तये पूर्वम् ।
विविधान्वरान्वरांस्तं वन्दे दुर्ज्ञेयदिव्यमहिमानम् ॥ २॥

सुरसावदनं विपुलं तरसा गत्वा विनिर्गतं दृष्ट्वा ।
यं सुरनिकरा विस्मयमाजग्मुर्नौमि तं महाप्राज्ञम् ॥ ३॥

लङ्कापुराधिदैवतगर्वं वेगाच्चपेटिकादानात् ।
निर्मूलं यश्चक्रे वन्दे तं वायुसूनुममितबलम् ॥ ४॥

गोष्पदवत्सरितांनिधिमुल्लङ्घ्याशोकविपिनगां सीताम् ।
अद्राक्षीद्भयरहितो यस्तं प्रणमामि शिंशुपामूले ॥ ५॥

रामादेशश्रवणानन्दादुद्धूतशोकगन्धां यः ।
सीतां चक्रे मतिमांस्तमहं प्रणमामि शोकविच्छित्त्यै ॥ ६॥

योऽक्षकुमारप्रमुखान् प्रवरान्दनुजाञ्जघान कुतुकेन ।
एकः सहायरहितस्तमहं प्रणमामि गन्धवहसूनुम् ॥ ७॥

प्राप्य मणिं सीतायाः काननमसुरस्य सत्वरं भङ्क्त्वा ।
दग्ध्वा लङ्कां योऽगाद्रघुवरनिकटं स मामवतु ॥ ८॥

सीताप्रोदितवचनान्यशेषतो यो निवेद्य रघुवीरम् ।
चक्रे चिन्तारहितं वन्दे तं चिन्तितार्थदं नमताम् ॥ ९॥

समरे वक्षसि येन प्रहतः संमूर्छितः ससंज्ञोऽथ ।
प्रशशंस रावणो यं तमतिबलानन्दवर्धनं नौमि ॥ १०॥

ओषधिगिरिमतिवेगाद्गत्वाऽऽनीय प्रवृद्धदिव्यतनुः ।
यो लक्ष्मणासुदानं चक्रे तं नौमि गरुडनिभवेगम् ॥ ११॥

रघुपतिमुखारविन्दस्रवदागमशीर्षतत्त्वमकरन्दम् ।
आपीयागलमनिशं नन्दन्तं नौमि पवनमूलधनम् ॥ १२॥

कनकाद्रिसदृशकायं कनकप्रदमाशु नम्रजनपङ्क्तेः ।
रक्ताम्बुजास्यमीडे सक्तान्तःकरणमिनकुलोत्तंसे ॥ १३॥

कारुण्यजन्मभूमिं काकुत्स्थाङ्घ्र्यब्जपूजनासक्तम् ।
कालाहितभयरहितं कामविदूरं नमामि कपिमुख्यम् ॥ १४॥

कुण्डलभासिकपोलं मण्डलमङ्घ्रिप्रणम्रजन्तूनाम् ।
कुर्वन्तमीप्सितार्थैः सर्वैर्युक्तं भजेऽञ्जनासूनुम् ॥ १५॥

नयनजितहेमगर्वं नयनयपारीणमञ्जनातनयम् ।
गतिविजितजनककीर्तिं मतिमतिनिशितां ददानमहमीडे ॥ १६॥

पुरतो भव करुणाब्धे भरताग्रचरणलग्नचित्ताब्ज ।
हर मम निखिलां चिन्तां करजितपाथोज कलितवटुरूप ॥ १७॥

रविसुतमन्त्रिवरेण्यं पविताडनसहनदक्षदिव्यहनुम् ।
कविशिष्यहरणचतुरं सवितृविनेयं नमामि वातसुतम् ॥ १८॥

वक्षस्ताडितशैलं रक्षःपतिसैन्यमर्दनप्रवणम् ।
रक्षाकरं नमस्याम्यक्षाधिपदूतमनिलपुण्यचयम् ॥ १९॥

सुरदेशिकसदृशगिरं करजैर्हीरस्य कठिनतागर्वम् ।
नरशृङ्गतां नयन्तं नरमनिशं नौमि वाद्यमनिलसुतम् ॥ २०॥

श्रीपारिजातपादपमूले वासं करोषि किं हनुमन् ।
अध्येतुमवनताखिलवाञ्छितदातृत्वमवनिजेड्दूत ॥ २१॥

पुरदग्धारं मनसिजजेतारं भक्तमन्तुसहनचणम् ।
त्वामीशानं के वा न ब्रुवते ब्रूहि वायुसूनो मे ॥ २२॥

पुरदग्धारं मनसिजजेतारं रामनामरुचिविज्ञम् ।
हनुमन्भवन्तमीशं वदति न कः प्रणतसर्वदोषसहम् ॥ २३॥

सहमानापरमूर्ते सह माननान्मम मन्तून् ।
पवमानपुण्यराशे प्लवमानाब्धौ नमामि तव चरणौ ॥ २४॥

इति शृङ्गेरि श्रीजगद्गुरु श्रीसच्चिदानन्दशिवाभिनवनृसिंह-
भारतीस्वामिभिः विरचिता श्रीहनूमच्चतुर्विशतिः सम्पूर्णा ।